व्यापारगोचरत्वं द्वेधा तदर्थसंपाद्यत्वेन वा पूर्वं सिद्धत्वेऽपि व्यापार्यतया वा । उभयथाप्यङ्गत्वमिति भावः । प्रयाजादेस्तु तद्वैषम्यमाह—**प्रयाजादयस्त्विवति** ।

सत्यमनङ्गभूतान्येव प्रयाजादीनि । तथापि यथा पुरोडाशयागे प्रयाजादीनामप्रयोजिकापि तत्प्रयुक्तिशक्तिः तथा प्रयाजादीनि पुरोडाशयागानङ्गभूतान्यपि तदङ्गत्वयोग्यतया तथा व्यवह्रियन्त इत्युक्तमाह—**उच्यत इति** । प्रतीयते व्यवह्रियते । अङ्गत्वयोग्यत्वे हेतुमाह—**शक्नोत्येवेति** ।

प्राभाकराभिमतक्रममनुवदति—**अन्येत्विति** । यथातिदेशसंभवादननुष्ठीयमानानामप्यवघातादीनां कृष्णलादिशेषत्वं तथा प्रयाजादीनामपीत्यर्थः । तन्मतेऽपि नास्मदुक्तविरोध इत्याह—**तथास्त्विति** । 'अङ्गस्वरूपसंबन्धप्रमाणं सप्रकारकम्'इति प्रक्रान्तमङ्गनिर्णयं निगमयति—**सर्वं समञ्जसमिति** ।

सकलस्यापि वेदस्यांशत्रयविशिष्टो विधियुक्तो भावनैवार्थः । तदंशान्वयक्रमविचाररूपैव द्वादशलक्षणी मीमांसा । तदन्वयक्रमं सर्वमाचार्यमतानुसारेण संक्षिप्य दर्शयति—**तदेष इति** । स्वशब्देन लिङ्शब्देन । अयोग्यतया निर्विशेषे निष्फले प्रवृत्त्ययोगादित्यर्थः । **इयं चावस्थेति** । विध्यन्वये प्रतीते यावदंशत्रयान्वयो निष्पद्यते ततः पूर्वावस्थेत्यर्थः । षष्ठाद्ये स्वर्गकामाधिकरणे । **तच्छब्दमध्याहृत्येति** । शाब्दी ह्याकाङ्क्षा शब्देनैव परिपूर्यत इति न्यायात् वाचकशब्द एवाध्याह्रियत इति भावः । **अपूर्वं कर्तव्यमिति** । फलकर्तव्यतायामपूर्वसंक्रान्तायां तस्याप्यविज्ञातप्रकारतया तत्रैव प्रकाराकाङ्क्षा जायत इत्यर्थः । षड्विधोपदेशाः श्रुतिलिङ्गादयः । त्रिविधातिदेशा वचननामधेयचोदनालिङ्गानि । श्रुत्यर्थपठनस्थानमुख्यप्रवृत्तयः क्रमप्रमाणानि । तेन तेन द्वारेण संनिपातिनां कारकसंस्कारमुखेनारादुपकारिणामवान्तरापूर्वद्वारेण जातिगुणयोः द्रव्यावच्छेदद्वारेण द्रव्यस्य क्रियानिर्वृत्तिद्वारेण ।

एवमंशत्रयान्वयमुक्त्वा प्रयुक्तिक्रममाह—**अत एवेति** । अपूर्वकल्पनात् पूर्वमेव करणस्य फलेनान्वयात् करणं फलप्रयुक्तमित्यर्थः । तत्र दृष्टान्तः—**दीक्षणीयादिवदिति** । अङ्गान्वयस्य त्वपूर्वकल्पनोत्तरकालत्वात् तेषामपूर्वप्रयुक्तत्वमित्याह—**अङ्गं त्विति** । तत्रापि दृष्टान्तः—**दीक्षणीयेति** । अङ्गेषु करणेषु च सर्वत्र विधेरेव प्रयोजकत्वेऽपि अपूर्वफलयोः प्रयोजकत्वोक्तिः प्रयोजनत्वादवगन्तव्या । एवमंशत्रयान्वये सति विधेः परिसमाप्तिदशामाह—**ततः सर्वेति** । फलार्थिनमित्यादिनार्थित्वसामर्थ्यलक्षणमधिकारिद्वयमपि दर्शितम् ।

अत्र संक्षेपे आचार्यसंमतिमपि संपादयति—**एतत्सर्वमिति** । भावनावचनो लिङ्शब्दः तां स्मारयति—'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते' ( श्लो. वा. शब्द. १०७ ) इति न्यायेन संकेतेन समयेनावगतं स्वार्थमवगमयतीत्यर्थः । लोकवत् लौकिकवाक्यस्थपदवत् । प्रक्रान्तरूपः प्रक्रमावस्थापन्नः । अन्यानपेक्षिणी अंशत्रयपरिपूर्णा ।

स्वग्रन्थस्य संप्रदायविशुद्धिं दर्शयति–**भुवनत्रयेति** । तत एव स्वकीयपितृसकाशादेव । स्वप्रबन्धस्योपादेयतां दर्शयति–**मीमांसाब्धिमिति** । मीमांसैवाब्धिः मीमांसाब्धिः शाबरभाष्यम् । मत्या स्वबुद्धिकौशलेन । आचार्यैः भट्टाचार्यैः । धीरः पार्थसारथिरिति शेषः ।

---

इति श्रीरामानुजाचार्यविरचिते न्यायरत्नमालाव्याख्याने

नायकरत्नेऽङ्गनिर्णये पञ्चमः परिच्छेदः ॥

---

संपूर्णोऽयं ग्रन्थः ।

---

## व्याप्तिवादः ।

यत्र विप्रतिपद्यन्ते सम्बन्धे लिङ्गलिङ्गिनोः ।
स्वरूपतः प्रमाणाच्च तत्र निर्णय उच्यते ॥ १ ॥

स्वरूपतस्तावत्कार्यकारणभावसंयोगसमवायैकार्थसमवायविरोधान्[1] लैङ्गिक-शब्दनिर्दिष्टानुमानकारणत्वेन काणादाः सङ्गिरन्ते–'अस्येदं कारणं कार्यं संबन्ध्ये-कार्थसमवायि विरोधि चेति लैङ्गिकम्' (वै. द. ९-२-१) इति । अविनाभावं साध-नस्य साध्यतदभावाभ्यामन्वयव्यतिरेकस्वरूपं तत्स्वभावतदुत्पत्तिनिबन्धनं शाक्या मन्यन्ते । साध्येन साधनस्य व्याप्तिमन्ये । नियमरूपं मीमांसकाः ।

प्रमाणतोऽपि विप्रतिपत्तिः । तत्स्वभावतदुत्पत्ती शाक्याः प्रमाणमाहुः । मा-नसप्रत्यक्षमन्ये । ऐन्द्रियकमेवान्ये । तदपि प्राथमिकमेवेति केचित् । अपरे तु भूयो-दर्शनसहायं चरमं प्रत्यक्षं नियमप्रमाणं मन्यन्ते । अर्थापत्तिमन्ये । भूयांस्येव तद्द-र्शनानि व्यभिचारादर्शनसहायान्याचार्याः ।

तत्र वैशेषिकपरिगृहीतकार्यकारणभावादिमात्राभ्युपगमे कृत्तिका[2]रोहिण्युदया-दीनां गम्यगमकभावो न स्यात् । कार्यकारणभावाद्यभावात् । न च संब[3]न्धिग्रहणेन सर्वसंग्रहः । तस्य संयोगसमवायमात्रपरत्वात् । सर्वपरत्वे च कार्यकारणभावादी-नामपि तत एव सिद्धेः पृथगभिधानानर्थक्यम् । अपि चैवं वह्नेरपि धूमानुमानं स्यात् । [4]कारणत्वात् । वृक्षत्वेन च शिंशपात्वस्य । एकार्थसमवायात् । अथानियत-त्वान्नायं प्रसङ्गः तर्हि नियम एवानुमानाङ्गं न कार्यकारणभावा[5]दि ।

शाक्यपक्षेऽपि स्वभावकार्ययोरेवान्वयलाभेन हेतुत्वान्न कृत्तिकोद[6]यादचिरोदि-तरोहिणीप्रतिपत्तिः सिद्ध्येत् । रसाच्च रूपानुमानम् । प्रवृत्ति(त्त)सामर्थ्यरूपोपादान-सहकारिरसोपादानं रसादनुमीयते । प्रवृत्ति(त्त)सामर्थ्याच्च रूपोपादानादुपादेयरूपा-नुमानमिति चेन्न । अकार्यत्वात् । यद्यपि कार्यात्कारणं सहकारिसहितमनुमीयते[7] । कारणात्तु प्रवृत्ति(त्त)सामर्थ्यादपि न कार्यं शक्यमनुमातुम् । अकार्यत्वादतत्स्वभाव-त्वाच्च । अथ[8] कारणमप्यनुमापकं वह्नेरपि धूमानुमान[9]प्रसङ्गः इत्युक्तम् । अपि चान्वयो नामानुगतिः । न च धूममूर्ध्वं गच्छन्तं भूमिष्ठो वह्निरनुगच्छति । शङ्कुच्छायां वा रवि-र्दिविष्ठो भूमिष्ठाम् । एतेन व्याप्तिः प्रत्युक्ता ।

न हि

[10]भूमिप्रतिष्ठितो वह्निर्धूमाग्रं व्योम्न्यवस्थितम् ।
व्याप्नोति नियमस्तस्मात् संबन्धो लिङ्गलिङ्गिनोः ॥ २ ॥

---

१. ग. रोधादिं लै । २. ग. कादिरो । ३. ग. बन्ध । ४. क. त्कार्यकार । ५. ग. वादीति । ६. ग. कोदयेना । ७. क. मिमते । ८. ग. कथं । ९. ग. मापकत्वप्र । १०. ग. भूमौ ।

यथोक्तम्–

"नियमो नाम सम्बन्धः स्वमतेनोच्यतेऽधुना।"इति।

**यो यथा नियतो येन यादृशेन यथाविधः[1]।**
**स तथा तादृशस्यैव तादृशोऽन्यत्र बोधकः॥ ३॥**

यो भावो येन यादृशेन यावद्देशकालवर्तिना यथा येन प्रकारेण संयोगसमवायैकार्थसमवायकार्यकारणभावादिना केनापि संबन्धेन साक्षात्परम्परया वा नियतत्वेन दृष्टान्तधर्मिष्ववधारितः स तादृशो धर्म्यन्तरेषूपलभ्यमानस्तत्र तादृशं तद्देशकं तत्कालवर्तिनं तथाविधसम्बन्धसम्बन्धिनमनुमापयति। तद्यथा–धूमो नभोवृत्तिरूर्ध्वं गच्छन्नातिदूरवर्तिना वह्निना नियतस्तथैव तं गमयति। नदीपूरस्त्वधुनातनोऽधोदेशगतश्चातिदूरवर्तिनीं वृत्तां वृष्टिम्[2]। उदयस्तु चन्द्रगतः समुद्रगतां तत्कालां वृद्धिम्। तस्यैव नभोमध्यस्थितिस्तामेव[3] वृद्धिं पञ्चदशनाडिकातिक्रान्ताम्। तादृश्यैव तया तस्या नियतत्वात्। एवमन्यत्राप्यूहनीयम्। नियम एव वार्तिके व्याप्तिशब्देनोच्यते॥

'संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना।
व्याप्यस्य गमकत्वञ्च व्यापकं गम्यमिष्यते॥' (श्लो. वा. अनु. ४)

इत्यादिषु।

केन पुनः प्रमाणेनायं[4] नियमोऽवगम्यते। कार्यकारणभावाद्वा स्वभावाद्वेति केचित्। तदयुक्तम्। अकार्यकारणातदाकारात्मनां[5] कृत्तिकारोहिण्युदयादीनां नियमाभावप्रसङ्गात्। अपि च पौर्वापर्यनियम एव कार्यकारणभावः। कथं च नियम एव नियमे प्रमाणम्। आत्माश्रयदोषापत्तेः। अपि च कार्यस्वभावयोरेव किं प्रमाणम्। प्रत्यक्षेण तावत्साहित्यमात्रं गम्यते। न तत्कार्यता तत्स्वभावता वा। शतशोऽग्नौ धूमदर्शनादनग्नौ चादर्शनात् तत्कार्यता धूमस्यावसीयत इति चेन्न। स खलु यत्र दृश्यते तत्र तस्यास्तिता। यत्र न दृश्यते तत्र नास्तित्वं गम्यते। कार्यता तु कुतः। तस्मात्कार्यकारणभावस्यैवाप्रमाणकत्वान्न तन्निबन्धनं नियमावधारणमवकल्पते। तत्स्वभावता चाप्रामाणिक्येव। शिंशपा हि वृक्षात्मिका क्वचिद्दृष्टाऽपि न तत्स्वाभाव्येन नियन्तुं शक्यते। तन्मात्रानुबन्धित्वात्तत्स्वभावतायाः[6]। न च शिंशपामात्रानुबन्धि वृक्षत्वमिति किञ्चित्प्रमाणमस्ति। सत्यपि सहोपलम्भे वृक्षत्वस्य व्यभिचारसंभवात्। न शिंशपात्वस्य क्वचिद्व्यभिचारो दृष्ट इति चेत्तथाऽपि देशान्तरे कालान्तरे वा व्यभिचारसंभवात्सन्देहानिवृत्तिः[7]। तन्न स्वभावतो नियमसिद्धिः।

---

१. ग. यथा तथा। २. ग. प्रावृषि। ३. क. मेवार्धप। ४. ग. प्रकारेण। ५. ग. कारणात्मनाम्। ६. ग. न्धिता हि तत्स्वभावता। ७. ग. हानति।

केचित्तु मानसप्रत्यक्षविषयं नियममाचक्षते। तदयुक्तम्। मनसो बहिरस्वात-न्त्र्यात्। भूयोदर्शनसहायं बहिः प्रवर्त्स्यतीति चेन्न। तस्य देहाबहिर्भावात्। न खल्वक्षजत्वमात्रं प्रत्यक्षलक्षणम्। अनुमानादेरपि लिङ्गादिसहितमनोक्ष[1]जन्यतया प्र-त्यक्षता मा भूत्। इन्द्रियार्थसंप्रयोगजं च प्रत्यक्षम्। चतुर्विधश्च संप्रयोगः। संयोगा-द्द्रव्यग्रहणम्। संयुक्तसमवायात् गुणकर्मसामान्यानाम्। संयुक्तसमवेतसमवायात् गुणत्वादीनाम्। तत्समवायात्तु गुणत्वादिगतसत्ताग्रहणम्। न चायं चतुर्विधोऽपि बाह्येन सह मनसः संभवति संप्रयोगः। तस्य देहादबहिर्भावात्। येऽपि विभु मनः संगिरन्ते तेषां यद्यपि मनो द्रव्यमाकाशवत् व्यापकं तथाऽपि(ते) कर्णच्छिद्रपरिच्छि-न्नस्येव गगनस्य देहावच्छिन्नस्यैवेन्द्रियभावमातिष्ठन्ते मनसः। अतोऽसंभवी बाह्येन संप्रयोगः। अन्यथाऽनुमानादीनामपि मनःसंयुक्तार्थविषयत्वात्प्रत्यक्षत्वप्रसङ्गः।

ननु यदि चतुर्विध एव संप्रयोगः कथं तर्हि शब्दग्रहणम्। न हि श्रोत्रस्याका-शादिगहंकाराणामन्यतमात्मकस्य शब्दस्य च निष्क्रियतया तयोः संभवति संयोगः। तस्य कर्मजत्वात्। उच्यते। संयोग एवानयोः सन्निकर्षः। न चायं कर्मजन्यः। संयोगजसंयोगे व्यभिचारात्। नापि संयोगजन्यः। कर्मजे व्यभिचारात्। तदुभया-नुगतं नैरन्तर्यमेव द्रव्यगतमस्य कारणम्। तच्च विभुनो(र्व्वो)रपि संभवति। भवतु वा संयोगजसंयोगस्याप्रमाणकत्वाज्ञ्जनितः[2] संयोगस्य कर्मजत्वम्। अव्य[3]भिचारात्। तन्तुगत एव हि तुरीसंयोगस्तन्तौ पटभावमापन्ने पटगतोऽपि भवति। न तु संयोगा-न्तरबुद्धिस्तत्रास्ति। अप्रमाणकत्वात्। तथाऽपि अजः[4] संयोगो विभुनो(र्व्वो)र्भवि-ष्यति अनुमानात्–विभुनी द्रव्ये मिथः संयुक्ते द्रव्यत्वे सति निरन्तरत्वात् घटाकाशं[5]-वदिति। यदि तु नैरन्तर्यमेव संयोगस्तथाऽपि विभुनोऽ(र्व्वोर)पि अविहतः संयोगः[6]। ननु द्रव्यधर्मः संयोगः। स कथं गुणभूतस्य शब्दस्य स्यात्। नायं गुणो द्रव्याश्रयत्वे प्रमाणाभावात्। ननु न कार्यमनाश्रितं संभवति। सत्यम्। न तु शब्दस्य कार्यत्वम्। नित्यत्वात्। कश्चिदेकेन्द्रियग्राह्यतया रूपादिवच्छब्दं गुणमिच्छति। तस्यापि वाया-वनैकान्तिकत्वम्। स्पर्शविरहे सतीति विशेषणेऽपि गोत्वरूपत्वादिसामा[7]न्येषु व्यभि-चारः। तेषां नेत्रैकगोचराणामपि गुणत्वाभावात्। अपि च यच्छब्दाश्रयत्वेनाभिमतं व्योम तत्प्रत्यक्षमप्रत्यक्षं वा स्यात्। प्रत्यक्षत्वे तेनैव लोचनैकगोचरेण द्रव्यभूतेन हेतोर्व्यभिचारः। अप्रत्यक्षत्वे सति तस्य सप्रतिसाधनत्वम्। न ह्यप्रत्यक्षगुण[8]त्वं प्रत्यक्षस्य शब्दस्य संभवति। शक्यत एव हि प्रयोक्तुम्–शब्दो न गुणः प्रत्यक्षद्रव्यगु-णत्वरहितत्वे सति प्रत्यक्षत्वात् घटवदिति। तस्माद्युक्तमस्य द्रव्यत्वे संयोगात् ग्रहण-मिति चतुर्विध एव सन्निकर्ष इति। बाह्येन मनसः सन्निकर्षाभावात् न मानसप्रत्यक्ष-

१. क. मनोज। २. ग. णकत्वं जनितः। ३. ग. जत्वव्यभि। ४. क. तर्ह्यजः। ५. ग. पटवत्। ६. ग. संयोगः स कथम्। ७. क. मान्यैर्व्य। ८. ग. त्यक्षद्रव्यगुणः प्रत्यक्षः संभवति।

विषयत्वं नियमस्य धूमादिवर्तिनः संभवति। तत्र प्रमाणान्तरमिदं भूयोदर्शनसहाय-मनोजन्यं लिङ्गादिसहितमनोजन्यानुमाना[1]दिवत्प्रसज्येत। तच्चानिष्टं प्रमाणषट्काभि-धायिनाम्।

कश्चित्तु बहिरिन्द्रियविषयमेव नियममिच्छति। स हि मन्यते—वह्निधूमयोः सम्बन्धो देशकालानवच्छिन्न एव प्रत्यक्षेणावगम्यत इति। ननु सन्निहितदेशकाल-विषयत्वात्प्रत्यक्षस्य तदवच्छिन्न एव संयोगः। नैवम्[2]। इदन्ता हि सन्निहितदेशका-लावच्छेदः[3]। स च द्रव्ययोरेवावगम्यते। न संयोगस्य। संयुक्ताविमाविति हि प्रतीतिः। न पुनरयमनयोः संयोग इति। तस्माद्देशकालाभ्यां संयोगेन[4] च द्रव्य-मेवावच्छिद्यते। न तु संयोगस्य देशकालावच्छेदकौ। तेनानवच्छिन्नः संबन्धो धूममात्रानुबन्धीति[5] निश्चीयते। ततश्च धूमसत्तैव देशकालान्तरादौ प्रमाणमपेक्षते। न त्वग्निसंयोगः। तस्य पूर्वमेवावगतत्वात्। अग्नेस्तु धूमसंयुक्तस्यापि दृष्टस्य क्वचि-द्व्यभिचारदर्शनादार्द्रेन्धनाद्युपाधिकृतोऽस्य धूमसंयोगो न स्वाभाविकः। धूमस्य तु तादृशोपाध्यदर्शनात् स्वाभाविकमग्निसंबन्धित्वं नियतं भवति। न हि स्वाभाविकं व्यभिचरतीति।

अत्र वदामः। संविदेवात्र तावत्परिपन्थिनी। सा हि देशकालाभ्यां संयोग-मेवावच्छिन्दती जायते। संयुक्तावेतौ वह्निधूमौ संयुज्येते संयोक्ष्येते इति संयोगस्यैव भावार्थस्य कालत्रयावच्छेदात्। सोऽयं स्वप्रयुक्त[6] एव बाणो भवन्तं प्रहरति। कारक-व्यापारो हि कालत्रयावच्छेद्यो न कारकमिति। न चावश्यमिदंशब्देनैव कालो निर्देष्टव्यः। लडादिभिः सुतरां निर्देशसिद्धेः। यदि च स्वतन्त्रस्यैव द्रव्यस्य काल-संयोगो न परतन्त्राणां गुणकर्मणां ततो लडादीनां कालविशेषे स्मृतानां निर्विषयत्वं[7] स्यात्। ते हि क्रियाया एव कालावच्छेदमुपदर्शयन्ति। न द्रव्यस्य। सा चेदनव-च्छेद्या कस्यैते कालसम्बन्धमभिदधीरन्। मा भूद्वा देशकालाभ्यामवच्छेदावगमः संयोगस्य। तथाऽपि स्वाभाविकत्वमप्रमाणमेव। न ह्यवच्छेदानवगममात्रेणैव तदभावावधारणं सिद्ध्यति। सतोऽप्यनवगतिसंभवात्। अनिश्चिते चावच्छेदाभावे न स्वाभाविकत्वं सिद्ध्यति। सिद्धौ वा वर्तमानकालताऽपि स्वाभाविकी धूमस्य स्यात्। यथा ह्यग्निसंयोगो द्रव्यविशेषणमेवं कालोऽपि। ततश्चाग्निसंयोगवत्स्वा-भाविकमेतत्कालसम्बन्धित्वमित्यापद्येत। तत्र यथाऽग्निसंयोगरहितस्य नावस्थान-मेवमेतत्कालसम्बन्धितामपहाय धूमस्य स्थित्यभावात् प्रत्यक्षेणैव कालान्तरसम्बन्ध-व्युदासात्क्षणिकता भावस्यापादितेति जितं सौगतैः।

---

१. क. जन्यज्ञाना। २. ग. मैवमिदं तथाहि। ३. ग. च्छेदा प्रतातिः स च। ४. क. संयोगो न च। ५. क. यायीति। ६. ग. गुरुमुक्त। ७. ग. नामनवकाशत्वं। ८. ग. गत्रदेव स्वाभाविक-मेव तत्।

अथानवच्छिन्नोऽपि कालसम्बन्धो न स्वाभाविकस्तथाऽग्निसंयोगोऽपि स्यात्। अथ स्वाभाविकमपि कालसम्बन्धमपहाय धूमस्तिष्ठेत् अग्निसंयोगमप्यपहाय सम्भवत्यवस्थानमिति न नियमावधारणम्। ननु प्रत्यभिज्ञायां[1] कालान्तरसम्बन्धावगमात् पूर्वकालप्रहाणेनापि सिद्ध्यति धूमस्यावस्थानम्। अग्निसंयोगन्त्वपहाय न कदाचिद्धूमो दृश्यत इति कथमसौ तमन्तरेण स्यात्। किमिदानीं प्रत्यक्षगृहीतैव क्षणिकता पश्चात्प्रत्यभिज्ञया बाध्यते। न ह्येवमभ्युपगमो भवताम्। अपि चैवमस्तु नाम प्रत्यक्षावगतकालान्तरसम्बन्धस्य पूर्वावगतक्षणिकत्वबाधः[2]। अनुमानेन तु कथमग्नेः प्रत्यक्षावगतक्षणिकभावस्य तद्बाधेन कालान्तरसम्बन्धोऽवगम्यते[3]। अपि चैवं प्रत्यक्षावगततत्कालसम्बन्धनियमविरुद्धस्यात्यन्तानवगतस्य कालान्तरसम्बन्धस्यानुमानेन ग्रहणे गृहीतग्राहित्वमनुमानस्य दूरापास्तं स्यात्।

अपि चानवच्छिन्नस्यापि कालसम्बन्धस्य व्यभिचारदर्शनादग्निसंयोगोऽपि व्यभिचरेन्न वेति सन्दिहाना न सहस्रेणापि पुरुषायुषैस्तदन्तं प्रतिलभेरन्। यद्यपि दृश्यमानेषु देशकालादिषु प्रयत्नेनान्विष्टो व्यभिचारो न दृष्टस्तथाऽपि क्वचित्कदाचित्संभवति व्यभिचार इति शङ्कां को नाम निवारयेत्। न च प्रत्यक्षं तन्निवारणे शक्तम्। तस्य सन्निहितदेशकालमात्रव्यापारात्। नानुमानम्। तस्य नियमावधारणाधीनत्वात्। तदधीने तु नियमे परस्पराश्रयदोषापत्तेः। स्वाभाविकत्वादव्यभिचार इति चेन्न। स्वाभाविकत्वे एव प्रमाणाभावात्। अनौपाधिकत्वमेव स्वाभाविकत्वम्। न चोपाध्यनवगतिमात्रेण तदभावसिद्धिरित्युक्तम्। अपि च स्वाभाविकं न व्यभिचरतीत्यत्र किं प्रमाणम्। न तावत्प्रत्यक्षं नानुमानं नाप्यन्यत्किञ्चित्। यथा दृष्टस्या[4]नौपाधिकस्यापि कालसंबन्धस्य व्यभिचारस्तथाऽग्निसम्बन्धस्यापि स्यात्। अपि चान्ययोरेवाग्निधूमयोर्दृष्टान्तधर्मिणि सम्बन्धोऽवगतः। अन्यश्चायं पर्वतवर्ती धूमः। तस्याग्निसम्बन्धोऽनवगत इति कथं लिङ्गं स्यात्। अथ सामान्यं लिङ्गम्। न। तस्य संबन्धानवगमात्। देशकालाभ्यां सम्बन्धेन जात्या च सर्वैर्द्रव्यमेव विशेष्यते। न तु सम्बन्धस्य जातेश्च परस्परान्वयः। जातेरपि संयोगवत् द्रव्यविशेषणत्वात्। अथ द्रव्यद्वारेणास्ति जात्योरपि सम्बन्धः। तथाऽप्यार्द्रेन्धनाद्युपाधिरिवाग्नेर्धूमसम्बन्धस्तद(न्धस्या)भावे कालान्तरे तद्द्रव्याभावे[5] तद्वारकः सम्बन्धोऽपि न स्यात्। द्रव्यान्तरद्वारस्तु कालान्तरसम्बन्धः प्रागनवगत इति कथमनुमानाङ्गम्[6]। न च विशेषपरिहारेण सामान्ययोः सकृद्दर्शनेन शक्यावगमः सम्बन्धः।

किञ्च देशकालाभ्यामपि द्रव्यद्वारेण संयोगस्याप्यवच्छेद इति नानवच्छिन्नत्वम्। यथा च जात्योर्द्रव्यद्वारकः सम्बन्धः स्वाभाविको भवत्येवमग्निसम्बन्धस्य

---

१. क. ज्ञया। २. ग. त्वबाधकत्वम्। ३. क. म्बन्धी। ४. क. दृष्टश्च। ५. ग. भावात्त। ६. ग. मानम्।

तत्कालावच्छेदो द्रव्यद्वारको[1]ऽस्तीति सोऽपि स्वाभाविकः स्यादिति तत्कालप्रहाणेन न कालान्तरे सम्बन्धस्तिष्ठेदित्यसम्बन्ध एव कालान्तरेऽग्निधूमयोर्भवदुक्तया नीत्या निश्चेतव्यः स्यात्। न तु कालान्तरेऽग्निसम्बन्धशङ्काऽपि धूमस्य स्यादित्यलमतिनिर्बन्धेन।

अपरं मतम्-शतशोऽग्नौ धूमदर्शनादनग्नौ चादर्शनान्नियतोऽयमग्निने[2]ति प्रतीतिस्तावदुपजायते तिरश्चामपि। न चेयमप्रमाणम्। सर्वदा सर्वेषां संवादित्वेन जायमानत्वात्। अतः प्रमाणमेवेदम्। तच्च षड्विधान्तर्भूतम्[3]। तत्र नेदमनुमानं सम्भवति। तस्य नियमावधारणाधीनत्वात्। न च शाब्दमशब्दजन्यत्वात्। नोपमानमसादृश्यविषयत्वात्। नार्थापत्तिर्नियममन्तरेणानवकल्पमानस्य कस्यचिददर्शनात्। अभावस्तु भावरूपे नियमे दूरापास्त एव। नन्वयं विपक्षव्यावृत्तिरूपोऽभाव एव। न व्यावृत्तिमात्रं नियमः। शशविषाणादेः सर्वविपक्षव्यावृत्तस्य सर्वार्थनियमप्रसङ्गात्। व्यावृत्तिरपि सर्वविपक्षेभ्यो दुर्लभैव। दृश्यादर्शनाभावात्। पारिशेष्यात्प्रत्यक्षमेवेदम्। न च प्रथमदर्शनेऽनवगमादप्रत्यक्षम्। रत्नतत्त्वस्येव भूयःपरिचयसचिवप्रत्यक्षविषयत्वोपपत्तेः।

ननु वर्तमानविषयं प्रत्यक्षम्। तत्कथमनेन देशकालान्तरसंबन्धात्मा नियमः शक्यावगमः। उच्यते। न कालान्तरादि[4]सम्बन्धो नियमः[5]। किन्तु स्वरूपं धूमादीनाम्। तच्च वर्तमानमिति युक्तं प्रत्यक्षग्राह्यत्वम्। न हि नियमं ग्रहीतुं देशान्तरादिसम्बन्धो ग्रहीतव्यः। कुड्यादीनामिव स्थिरं रूपम्। न हि तेषां कालान्तरसंबन्धोऽप्रत्यक्ष इति तद्रूपमप्रत्यक्षं भवति। तथा सति नेदं रजतमिति पूर्वज्ञानबाधकत्वमुत्तर[6]स्य न स्यात्। विषयभेदात्। पूर्वकाले हि रजतज्ञानेन रजतं प्रसञ्जितम्। उत्तरकाले च तदभाव इति विषयभेदात् कथं बाधकत्वम्। अतः स्थिरमेव रजतरूपं गृहीतमिति वक्तव्यम्। आह च-

"रजतं गृह्यमाणं हि चिरस्थायीति गम्यते[7]।" इति।

तद्वन्नियमरूपं गृह्यत इति[8] युक्तं प्रत्यक्षत्वम्। कीदृशं पुनरिदं रूपं धूमादी[9]नाम्। नियतोऽयमग्निनेति नियमः। यदा यत्र धूमस्तदा तत्राग्निरित्यर्थः। तस्मादुपपन्नं प्रत्यक्षविषयो नियम इति।

तत्रेदं वक्तव्यम्। किं प्रत्यक्षं सर्वं विद्यमानोपलम्भनम् आहोस्विदविद्यमानोपलम्भनमपीति। न तावदविद्यमानोपलम्भनं प्रत्यक्षं नाम संभवति। सत्सं[10]प्रयोगजनितत्वेन विद्यमानोपलम्भनत्वस्य स्थितत्वात्। तथा च नियमविषयत्वा[11]सम्भवः।

---

१. क. द्वारकोऽपि स्वाभा। २. ग. मनेने। ३. ग. षड्विधम्। ४. ग. न्तरसं। ५. ग. यम्यः। ६. क. रकाले। ७. ग. गृह्यते। ८. ग. रूपस्यापि युक्तम्। ९. ग. धूमरूपम्। १०. क. तत्संप्र। ११. ग. यत्व।

तस्य सर्वदेशकालव्याप्ति[1]रूपत्वात् । अयमेव हि धूमस्याग्निना नियमः यदखिलधूमदेशकालव्यापित्वमग्नेः ।

यथोक्तम्–

"यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।

स व्याप्यो व्यापकस्तस्य समो वाऽप्यधिकोऽपि वा ॥" इति ॥(श्लो. वा. अनु ५.)

यत्तु धूमस्वरूपं नियम इत्युक्तम् । अस्त्वेतत् । स्वरूपमपि तदग्निसम्बन्धाव्यभिचारात्मकमेव । कश्चासावव्यभिचारः । नान्य[2]दतो यावद्धूमदेशकालमग्निसम्बन्धसद्भावात् । तथा च तस्मिन् प्रत्यक्षीक्रियमाणे देशान्तरादिसंबन्धः प्रत्यक्ष आपद्येत । तत्सम्बन्धातिरिक्तन्तु पाण्डुरत्वादिवद्धूमगतं नियमाभिधानमपरोक्षं रूपमीक्षत इति संविद्विरुद्धम् । यदि चेदं रूपान्तरं पाण्डुरत्वादिवत्संबन्धातिरिक्तं स्यात् तस्मिन् प्रत्यक्षगृहीतेऽपि सर्वधूमदेशकालव्यापित्वमग्नेर्गृहीतं न[3] स्यात् । न ह्यन्यस्मिन् गृहीतेऽन्यद्गृहीतं भवति । अतिप्रसङ्गात् । अगृहीते च देशकालाव्यभिचारे कथमनुमानोदयः । किञ्चेदं रूपान्तरमपि प्रत्यक्षेण गृह्यमाणं सन्निहितदेशकालावच्छिन्नमेव गृह्यत इति न कालान्तरेषु[4] नियमः सिध्येत् ।

यदपि दर्शितं कुड्यादीनामिव स्थिरं[5] रूपमिति तदपि निरूपणीयम् । किं तत्र स्थायित्वमेव गृह्यत इत्यभिप्रायः किं वा यद्वस्तुतः स्थास्नु रूपं तद्गृह्यत इति किं वा स्थितियोग्यता । न तावत्पूर्वः कल्पः । स्थायिता ह्यनेककालावस्थानम् । सा कथं प्रत्यक्षेणैव गृह्यते । तस्य वर्तमानविषयत्वात् । यदि चेदं प्रत्यक्षेणैव गृह्यते ततः स्थायिताप्रसिद्धये प्रत्यभिज्ञादरो निरर्थकः स्यात् । द्वितीये तु कल्पे कुड्यरूपमेव तत् । नान्यत् । एवमिहापि यद्वस्तुतो निय[6]तधूमस्वरूपमेव तत्प्रत्यक्षमित्येतावत् सिद्ध्येत् । न च तावता किंचित्प्रयोजनमस्ति । योग्यता तु सर्वभावानामर्थापत्तिगम्येति प्रत्यक्षगम्यतानुपपत्तिः । यस्तु घटकुड्यादिषु दृष्टमात्रेषु स्थायित्वावगमो लौकिकानां स तादृशां स्थायित्वस्य पूर्वमेवानुग[7]मादानुमानिकः । स्पष्टं चास्यानुमानिकत्वमुक्तरूपत्वात् । तथा हि ईदृशीयमवगतिः–यदि शस्त्रादिना नैतच्छिद्यते ततः कियन्तश्चित् कालं स्थास्यतीति । एवं रजतादिष्वप्यानुमानिकमेव तद्रूपस्य स्थायित्वम् । अनेनैवाभिप्रायेणोक्तम्–

'रजतं गृह्यमाणं हि चिरस्थायीति गृह्यते' । इति ।

एतदेव[8] बाधकस्यापि तत्त्वम् । अनुमानेन ह्येतदवगतं रजतस्य सतो नाकस्मादतद्भावः संभवतीति । अतद्रूपस्य वा तद्रूपतेत्युभयोरपि कालयोरेकरूपमेवेदमिति स्थिते पूर्वमेवावगतं रजतरूपमुत्तरकालं व्याप्नोति । उत्तरकालावगतश्चातद्भावः

१. क. व्यापि । २. क. अन्य । ३. ग. तं स्या । ४. क. रेण । ५. क. स्थितम् । ६. ग. निश्चि । ७. ग. मेवानुगतत्वा । ८. ग. इत्यतएव । ९. ग. न तत्र्यैव । १०. ग. स्थितिः । पूर्वावगतमपि ।

तत्पूर्वकालम् । तेन समानविषयतया पूर्वावगतस्य रजतरूपस्य भवत्युत्तरकालभुवा नेदं रजतमित्यनेन बाधः । यत्र त्वनुमानेनैकरूपत्वं न कालद्वयेऽपि वस्तुनोऽवगतं तत्र न भवत्येव बाधः । यथा बदरफले श्यामप्रत्ययस्य पाककालभुवा रक्तप्रत्ययेन । प्रत्यक्षेण तु स्थायित्वावगमे तत्रापि बाधः स्यात् । तस्मान्न प्रत्यक्षेण स्थायित्वं स्वध्यवसानम् । एवं नियमोऽपि । सर्वदेशकालव्याप्तिरूपत्वात्[1] ।

ननु स्वाभाविकत्वं संबन्धस्य नियमः । न तु कालान्तरसम्बन्धः । तच्च वर्तमानमेवेति युक्तं यत्प्रत्यक्षेण गृह्यते । किं पुनरिदं स्वाभाविकत्वम् । न तावत्सदातनत्वम्[2] । कादाचित्कस्य तदयोगात् । अथ स्वरूपनिमित्तत्वम् । अग्नेरपि धूमसंबन्धे स्वरूपं निमित्तमिति तस्यापि धूमसंबन्धो नियतः स्यात् । नन्वार्द्रेन्धनादिकृतोऽस्य धूमसम्बन्धो न स्वरूपनिमित्तः । सत्यमार्द्रेन्धनादि निमित्तम् । स्वरूपमपि निमित्तमेव । न ह्यसति संबन्धिस्वरूपे सम्बन्धो भवति । स्वरूपधर्मत्वमिति चेत् । स एव दोषः । अग्निस्वरूपस्यापि धर्म एव संयोगः । अथ[3] स्वरूपैकनिमित्तकः सम्बन्धः स्वाभाविकः । वह्नेस्तु धूमसंबन्धे स्वरूपातिरिक्तोऽप्यार्द्रेन्धनादिरस्त्येव हेतुः । धूमस्य वह्निसम्बन्धे स्वरूपमेव निमित्तम् । न निमित्तान्तरमस्तीति मतम् । एवन्तर्हि न प्रत्यक्षगम्यं[4] स्वाभाविकत्वम् । न हि तेन निमित्तान्तराभावः शक्यते प्रत्येतुम् । भावविषयत्वात्प्रत्यक्षस्य । दृश्यादर्शनात्तु निमित्तान्तराभावः प्रतीयत इति प्रत्यक्षगम्यत्वानुपपत्तिः । अपि च धूमस्याग्निसम्बन्धे न स्वरूपमेव निमित्तम् । अग्न्यादीनामपि निमित्तत्वात् । तस्मात्स्वरूपाव्यभिचार एव स्वाभाविकत्वम् । अव्यभिचारश्च सकलतद्देशकालव्याप्तिरिति प्रत्यक्षगम्यत्वानुपपत्तिः । तस्य वर्तमानविषयत्वात् । अपि च स्वाभाविकताऽपि वर्तमानस्यैव संनिहितस्य[5] संबन्धस्य निश्चेतुं शक्यते । नातीतानागतव्यवहितविप्रकृष्टानां संबन्धानाम् । सन्ति हि बह्वयो वह्निधूमसम्बन्धस्य व्यक्तयः । कथं तासां सर्वासां धूमस्वरूपमेव निमित्तमिति संप्रयुक्तविषयेण प्रत्यक्षेण गम्यते । अथ सम्बन्धसामान्यस्य तन्निमित्तत्वम् । न । तस्य नित्यत्वेन निमित्ताभावात् । इदञ्च सकृद्दर्शनगम्य[6]नियमपक्षेऽपि तुल्यमेव दूषणम् । तत्रापि हि संप्रयुक्तस्यैव संयोगस्य धूम[7]निमित्तताऽवगम्यते नातीतादीनाम् । स च कालान्तरे नष्ट इति प्रत्यक्षावगतस्य संयोगस्य रूपनिमित्तेन न [8]कालान्तरेऽनुमानम् । तस्मान्न कथञ्चित् प्रत्यक्षविषयत्वं नियमस्येति स्थितम् ।

अपरे त्वर्थापत्तिगम्यं नियमं मन्यन्ते । यदेतच्छतशोऽग्नौ धूमदर्शनमनग्नौ च क्वचिदप्यदर्शनमिदमसति धूमस्याग्निना नियमेऽनुपपन्नम् । अनियतो हि कदा-

१. क. त्वान्न । २. ग. तावदाकस्मिकत्वम् । ३. ग. धर्मिस्वरू । ४. क. हिप्रत्य । ५. ग. तस्य निश्चे । ६. ग. दर्शनसंबन्धनि । ७. क. धूमाभावनि । ८. ग. स्य न काला । क. रूपनिमित्तेन काला ।

चित्कचिदप्यग्निं विनोपलभ्येतेति । तदप्यनुपपन्नम् । अदर्शनं तावदभावादेवोपप-न्नम् । न तु तावता सर्वत्रानग्नौ नास्तीति शक्यमवध्यवसातुम् । प्रमाणाभावात् । दर्शनमात्रमपि तेच भावादेवोपपन्नम् । न तु तावन्मात्रेण सर्वत्राग्नावस्त्येव धूम इति स्वध्यवसानम् । तस्माद्वक्तव्यं नियमे प्रमाणम् । उच्यते । किमत्र वक्तव्यम् । यतः[२]–

स्वयं वार्तिककारेण प्रमाणमृजु[३] दर्शितम् ।
भूयोदर्शनगम्या हि व्याप्तिरित्यभिधानतः ॥ ४ ॥

अनृजवो हि पूर्वमार्गा महान्तं क्लेशमाश्रित्यानुभवानारूढा वैयात्यमात्रेणाग-तिकगतिन्यायेनाश्रिताः । नियतो धूमोऽयं नूनमग्निनेत्यूहरूपस्य ज्ञानस्य[४] संविद्धि-रुद्धप्रत्यक्षत्वाश्रयणात् । अस्ति चायमृजुमार्गो भूयोदर्शनगम्यो नियम इति । किं पुनरिदं भूयोदर्शनं नाम । प्रमाणं नैकं किंचिन्नियमस्य वक्तुं शक्यते । किन्तु येनैव प्रत्यक्षादीनामन्यतमेन[५] प्रमाणेन लिङ्गस्य भूयःसाहित्यं लिङ्गिना गम्यते तदेव विपक्षा-दर्शन[६]प्रमाणसहायं नियमप्रमाणं भवतीति । ननु भूयोभिर्दर्शनैस्तत्र तत्र साहित्यं गम्यते । न तु सर्वत्र । दर्शनानां सर्वेषां स्वविषयपर्यवसानात् । अनन्तप्रत्यक्षगम्यो हि सर्वत्र सहभावः । स जीवद्भिर्दुर्लभः । विपक्षादर्शनादपि प्रत्यासन्नेष्वेव विपक्षेषु परमभावो गम्यते । सर्वविपक्षव्यावृत्तिस्तु दुर्लभैव । दृश्यादर्शनाभावात् । अदर्शन-मात्रेण चाभावासिद्धेः । तत्कथं नियमस्य सर्वदेशकालव्याप्तिरूपस्य भूयोदर्शनगम्य-त्वम् । एतच्च स्वयमेवाचार्येण शङ्कितम् । यदाह[७]–

"अन्वयो हि प्रतिव्याप्यं व्यापकस्य न दृश्यते ।
अनन्तेन हि लभ्येत स प्रत्यक्षादिजन्मना ॥" इति ॥

तथा—

"नाभावेन विपक्षाद्धि हेतुर्भावः[८] प्रतीयते ।" इति च ।

सर्वविपक्षाभावो न लभ्यत इत्यर्थः । अत्र च समर्थनमुक्तम्–

"तत्रास्याद्दष्टिमात्रेण गमकः सहचारिणः ।" इति तत्रेति विपक्ष इत्यर्थः ।

एतदुक्तं भवति-मा नाम सर्वविपक्षाभावो लिङ्गस्य सैत्सीत्[९] । अदर्शनन्तु विपक्षेषु लिङ्गस्यास्त्येव । तावता च सहचारी दृष्टो धूमादिः सहचारिणोऽग्न्यादेर्ग-मको भवति । यत्तु सहचारित्वमपि सर्वत्र दुर्लभं द्रष्टुमित्युक्तं तत्राप्युत्तरमुक्तम्–

"दुर्लभं सहचारित्वं सर्वत्रेति यदुच्यते ।
द्रष्टुं न नाम सर्वत्र द्वित्रयोर्दृश्यते ध्रुवम् ॥
साहित्ये मितदेशत्वात्प्रसिद्धे वह्निधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्पते[१०] ॥" इति ॥ (श्लो. वा. अर्था. ४२)

---

१. ग. तत्र । २. ग. यावता । ३. क. णमुप । ४. ग. रूपस्य संवि । ५. क. मेन लि । ६. क. र्शनसहा । ७. ग. यथा । ८. ग. हेत्वभा । ९. ग. सेत्स्यतीति । १०. क. वा ।

अयमर्थः–मा नाम सर्वत्र सहचारित्वं दर्शि[1]। द्वित्रयोस्तु प्रदेशयोरी[2]षत्करं दर्शनम्। तावता[3] चासति व्यभिचारदर्शने भवत्यनुमानम्। यदि हि सकलदेशकालव्याप्तिरूपो नियमोऽनुमानाङ्गमस्माभिरुपगम्येत ततः स्यादुपाल[4]म्भः। न त्वेवमस्माभिरुच्यते। किन्तु यत्र यत्र धूमादिकं दृष्टं तत्र तत्र सर्वत्र नियमेनाग्न्यादिसाहित्यमनग्नौ चादर्शनमित्येतावदेवानुमानोदये कारणम्। एतावदे(तै)व हि लौकिकानां धूमोऽग्निं गमयति। न तु सकलसपक्षविपक्षान्वयव्यतिरेकावगतिमपेक्षते। येन दुर्लभं प्रमाणं स्यात्। तेन न सकलदेशकालापेक्षया नियमाभिधानम्। अपि तर्हि दृश्यमानेषु देशकालेषु यो लिङ्गस्य लिङ्गिसाहित्यनियमः स एव नियम इत्युच्यते। तस्मात्तन्मात्रमेवानुमानाङ्गम्। तच्च भूयोभिरेव दर्शनैः सुगममिति नाप्रमा[5]णं लिङ्गिसाहित्यनियमः। यथाऽऽह–

'सहत्वदृष्टिमात्रेण गमकः सहचारिणः।' इति।

कियद्भिः पुनःसाहित्यदर्शनैरनुमानम्। को नामैतत्संचष्टे। यावद्भिर्दृश्यते तावद्भिरेव। न तु संख्याय वक्तुं शक्यते। येऽपि भूयोदर्शनसहायप्रत्यक्षगम्यं नियममाहुः येऽपि सकृद्दर्शने[6]ऽपि गृहीते नियमे उपाध्याशङ्कानिराकरणार्थमर्थयन्ते भूयोदर्शनं तेऽपि नैवं संचक्षते। तथा वयमपीति न[7] कश्चिद्विशेषः।

किमिदानीं सकलधूमदेशकालव्यापित्वमग्नेर्नावगन्तव्यमनुमितसता। सत्यं नावगन्तव्यम्। नन्वेवं सामान्यतोऽप्यज्ञातसम्बन्धः पक्षैकदेशी कथमिव ज्ञातसम्बन्धपदेनाभिधीयते। नानेन पक्षैकदेशिनोऽभिधानम्। अपि तु दृष्टान्तैकदेशिनः। तदयं भाष्यार्थः–अन्यस्मिन्नेव महानसाद्येकदेशिनि धूमाग्न्येकदेशाभ्यां ज्ञातसम्बन्धे सति तदेकदेशं धूममन्यत्र पर्वतादौ तस्मिन्नेव वा महानसे कालान्तरे दृष्ट्वाऽग्निरनुमीयते। लोके तथा दर्शनात्। तथा च ज्ञातसम्बन्धपदेन ज्ञातुर्निर्देश इत्युक्त्वा अथ वा न प्रमातुः। किन्तु प्रमेयस्य कस्यचिन्निर्देशो न ज्ञातुरित्यर्थः। कस्य प्रमेयस्यैकदेशिन इत्यपेक्षायां दृष्टान्तैकदेशिन इत्युक्तम्। यथाहुः–

'एकदेश्येकदेशाभ्यां कश्चिच्चेज्ज्ञातसंगतिः।
तत्तुल्योऽन्यः स वा ताभ्यां विभागेनानुमीयते॥'इति॥

स वा ताभ्यामिति कालान्तराभिप्रायम्। एवञ्च वदन् ज्ञातसम्बन्धपदेनैकदेश्यन्यपदार्थपक्षे दृष्टान्तैकदेशिनोऽभिधानमित्याह। भवतु नामैवं यथादृष्टप्रदेशेषु साहित्यनियमादेवानुमानम्। यस्त्वयं[8] यत्र यत्र धूमस्तत्र तत्राग्निरिति भूयोदर्शनतोऽवगमः स कथम्। न ह्यसौ नास्ति। न चाप्रमाणम्। सर्वदा सर्वेषां दृढत्वेन जायमानत्वात्। तदयं कस्मिंश्चित्प्रमाणेऽन्तर्भवतीति वक्तव्यम्। उच्यते। आनुमानि-

१. ग. रित्वादग्निः। २. ग. योरिष्ट। ३. क. तात्व। ४. ग. दुर्लभत्वम्। ५. ग. माणकत्वम्। ६. ग. कृद्गृहीते। ७. क. न तद्धि। ८. ग. अस्त्ययम्।

कोऽयमवगमः। ज्ञातसम्बन्धस्योपजायमानत्वात् परोक्षरूपत्वाच्च। नैन्द्रियकः साक्षात्कारित्वाभावात् संविद्विरोधाच्च। धूमस्य हि बहुषु देशकालेष्वग्निना साहित्यमुपलब्धवतो भवत्यनुमानम्–अन्येऽप्यतीतानागतविप्रकृष्टाः सर्व एव धूमवन्तोऽग्निमन्तो धूमवत्त्वात् परिदृष्टमहानसादिवदिति। तेन यथालोकं प्रमाणसामग्र्यनुसरणाद्धर्म्यन्तरगतसाहित्यनियमादेव धर्म्यन्तरेऽनुमानमित्यनवद्यम्। आह च–

"तेन[1] धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी।
देशे यावति काले वा व्याप्यता प्राङ्निरूपिता॥
तस्य तावति तादृक् स्यात् दृष्टधर्म्यन्तरे पुनः।
व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः॥"इति॥ (श्लो. वा. अनु. १०·११)

यादृशतादृशशब्दाभ्यां दृष्टान्तपरिदृष्टरूपान्न्यूनरूपस्य न लिङ्गत्वं नापि लिङ्गित्वमिति दर्शितम्। न हि विना धूमत्वं पाण्डुरत्वमात्रेण कपोतादिभ्योऽग्निमनुमिमते लौकिकाः। नाप्युष्णवह्निनियतस्तृणविकारो हिमे दृष्टः प्रत्यक्षावगतशैत्यविरोधादौष्ण्यबाधे सति अनुष्णमेव वह्निमनुमापयति। यथालोकं च प्रमाणगतिः परीक्षकैरनुसरणीया। न तद्विरोधेन। तदनेन सर्वेषामप्रयोजकहेतूनामाभासत्वं दर्शितम्। दृष्टान्तपरिदृष्टरूपान्न्यूनरूपो हेतुरप्रयोजक इत्युच्यते। पक्षसपक्षसम्बन्धभेदमात्रन्तु सोढव्यम्। सर्वानुमानेषु तथा दर्शनात्। तदतिरिक्तन्तु रूपमविकलमेवाङ्गीकर्तव्यम्। तेन निषिद्धत्वसहितस्य हिंसात्वस्याधर्मत्वेन[2] साहित्यमुपलब्धं ब्राह्मणहननादिष्विति विनाऽपि निषिद्धत्वेन हिंसात्वमात्रान्नाग्नीषोमीयहिंसायामधर्मत्वमनुमातुं[3] शक्यम्। निषिद्धत्वस्य तु विनाऽपि हिंसात्वेन गुर्वङ्गनागमनादावधर्मत्वसाहित्यं[4] दृष्टमिति तदनुमापकम्। यथाऽध्ययनादिकार्यवतः शिष्यस्यासकृदुपाध्यायसाहित्यमवगतमिति न शिष्यमात्रेणाध्यापकानुमानं तथा देवदत्ततनयानां श्यामत्वसाहित्यं गर्भपरिणामसमयोपयुक्ताशितपीतादिविशेषनिमित्तमिति तदभावे देवदत्ततनयत्वमात्रेण न तत्तनयान्तरस्य श्यामत्वानुमानम्।

एतेन संनिवेशविशिष्टतया तनुतरुमहीधरादीनां[5] घटादिवदुपलब्धिमत्कर्तृकत्वानुमानं प्रत्युक्तम्। तथा हि येषु हस्तादिव्यापारविशेषेण संनिवेशाः शक्यन्ते रचयितुं तेषामेव घटपटगृहादीनामुपलब्धिमत्कर्तृकत्वम्। तदभावे पारिणामिकानामङ्ग[6]-देहादीनां सन्निवेशविशेषमात्रेण कथं तदनुमानं पाण्डुरमात्रादिव वह्न्यनुमानम्। तथा शरीरेन्द्रियादियुक्तबुद्धिमत्कर्तृकत्वेन साहित्यं संनिवेशविशिष्टानामुपलब्धम्। तच्च दृश्यादर्शनाद्दूर्वाङ्कुरादिषु निषिद्धम्। तस्मिन्निषिद्धे बुद्धिमन्मात्रं शरीरादिरहितं नानुमातुं शक्यम्। तृणादिविकारादिव हिमेऽनुष्णवह्न्यनुमानम्[7]। न चैवं सर्वानुमा-

१. ग. ज्ञात। २. ग. र्मसाधनत्वेन। ३. ग. या अधर्मसाधनत्वम्। ४. ग. र्मसाधनत्वसा। ५. क. हीरुहा। ६. ग. परि। ७. क. मे उष्ण।

नोच्छेदप्रसङ्गः । सर्वविशेषपरिहारेण[1] धूमत्वसामान्यस्य वह्नित्वसामान्येन साहित्यमवगतम् । पर्वते च तदविकलमेव दृष्टमिति युक्तं तत्र तदनुमानम् । सामान्यमेवानुमीयते । न विशेषः । अनुगत्यभावात् । अवगतमपि महानसादौ सामान्यं देशान्तरकालान्तरादौ प्रत्यक्षेणेवानुमानेन प्रत्यभिज्ञायमानं भवति प्रमेयमिति न सिद्धसाध्यता । सामान्यस्यापि चास्त्येव संयुक्तसमवायसम्बन्धः पर्वतेनेति युक्तं तत्र तस्यानुमानम् ।

ननु देशविशेषादपि पदार्थस्वरूपमन्यथा भवति । क्वचिद्धि वृश्चिकदंशादपि मरणं भवति । क्वचिन्न । तथा धूमस्यापि देशान्तरेऽग्निव्यभिचारशङ्का भवेत् । सत्यमेषा भवति । सा तु तत्तद्देशादागतेभ्यः श्रुत्वा शक्यते निरसितुमिति सर्वमवदातम् । तेन यस्य यादृशस्य सामान्यस्य विशेषस्य वा येन यादृशेन सामान्येन विशेषेण वा यथादृष्टेषु देशकालेषु साहित्यं येन केनापि सम्बन्धेन नियतमुपलब्धं तदेव तादृशमेव देशान्तरकालान्तरादौ दृष्टं तस्य तादृशस्य साहित्यनियमादेव बोधकं भवति । दृष्टप्रदेशेषु भूयोभिरेव दर्शनैर्व्यभिचारादर्शनमात्रसहायैः साहित्यनियमः शक्यावगम इति सिद्धं नियमरूप एव लिङ्गस्य लिङ्गिना संबन्धः स च भूयोदर्शनप्रमाणक इति ।

**पार्थसारथिमिश्रेण वार्तिकोक्तानुसारतः ।**
**यथाप्रतीति निर्णीतो नियमः सप्रमाणकः ॥ ५ ॥**

इति पार्थसारथिमिश्रविरचितायां न्यायरत्नमालायां व्याप्तिवादः समाप्तः ॥



१. क. णेन ।

I

## न्यायरत्नमालाकारिकाणामनुक्रमणिका।



# II

## सव्याख्यन्यायरत्नमालायामनूदितानां ग्रन्थग्रन्थकाराणामनुक्रमणिका ।



# Gaekwad's Oriental Series

## CATALOGUE OF BOOKS
## 1937

ORIENTAL INSTITUTE, BARODA

# SELECT OPINIONS

Sylvain Levi: The Gaekwad's Series is standing at the head of the many collections now published in India.

Asiatic Review, London: It is one of the best series issued in the East as regards the get up of the individual volumes as well as the able editorship of the series and separate works.

Presidential Address, Patna Session of the Oriental Conference: Work of the same class is being done in Mysore, Travancore, Kashmir, Benares, and elsewhere, but the organisation at Baroda appears to lead.

Indian Art and Letters, London: The scientific publications known as the "Oriental Series" of the Maharaja Gaekwar are known to and highly valued by scholars in all parts of the world.

Journal of the Royal Asiatic Society, London: Thanks to enlightened patronage and vigorous management the "Gaekwad's Oriental Series" is going from strength to strength.

Sir Jadunath Sarkar, Kt.: The valuable Indian histories included in the "Gaekwad's Oriental Series" will stand as an enduring monument to the enlightened liberality of the Ruler of Baroda and the wisdom of his advisers.

The Times Literary Supplement, London: These studies are a valuable addition to Western learning and reflect great credit on the editor and His Highness.

# GAEKWAD'S ORIENTAL SERIES



**Critical editions of unprinted and original works of Oriental Literature, edited by competent scholars, and published at the Oriental Institute, Baroda**

## I. BOOKS PUBLISHED.

Rs. A.

1. **Kāvyamīmāṁsā**: a work on poetics, by Rājaśekhara (880–920 A.D.): edited by C. D. Dalal and R. Anantakrishna Sastry, 1916. Reissued, 1924. Third edition revised and enlarged by Pandit K. S. Ramaswami Shastri of the Oriental Institute, Baroda, 1934 .. 2–0

*This book has been set as a text-book by several Universities including Benares, Bombay, and Patna.*

2. **Naranārāyaṇānanda**: a poem on the Paurāṇic story of Arjuna and Kṛṣṇa's rambles on Mount Girnar, by Vastupāla, Minister of King Vīradhavala of Dholka, composed between Samvat 1277 and 1287, *i.e.*, A.D. 1221 and 1231: edited by C. D. Dalal and R. Anantakrishna Sastry, 1916 .. .. .. *Out of print.*

3. **Tarkasaṅgraha**: a work on Philosophy (refutation of Vaiśeṣika theory of atomic creation) by Ānandajñāna or Ānandagiri, the famous commentators on Śaṅkarācārya's Bhāṣyas, who flourished in the latter half of the 13th century: edited by T. M. Tripathi, 1917. *Out of print.*

4. **Pārthaparākrama**: a drama describing Arjuna's recovery of the cows of King Virāṭa, by Prahlādanadeva, the founder of Pālanpur and the younger brother of the Paramāra king of Chandrāvatī (a state in Mārwār), and a feudatory of the kings of Guzerat, who was a Yuvarāja in Samvat 1220 or A.D. 1164: edited by C. D. Dalal, 1917 .. .. .. *Out of print.*

5. **Rāṣṭrauḍhavaṁśa**: an historical poem (Mahākāvya) describing the history of the Bāgulas of Mayūragiri, from Rāṣṭrauḍha, king of Kanauj and the originator of the dynasty, to Nārāyaṇa Shāh of Mayūragiri, by Rudra Kavi, composed in Śaka 1518 or A.D. 1596: edited by Pandit Embar Krishnamacharya with Introduction by C. D. Dalal, 1917 .. .. *Out of print.*

6. **Liṅgānuśāsana**: on Grammar, by Vāmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century: edited by C. D. Dalal, 1918 .. .. .. .. 0–8

7. **Vasantavilāsa**: an historical poem (Mahākāvya) describing the life of Vastupāla and the history of

Rs. A.

Guzerat, by Bālachandrasūri (from Modheraka or Modhera in Kadi Prant, Baroda State), contemporary of Vastupāla, composed after his death for his son in Samvat 1296 (A.D. 1240) : edited by C. D. Dalal, 1917 — 1-8

8. **Rūpakaṣaṭkam** : six dramas by Vatsarāja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century : edited by C. D. Dalal, 1918 .. *Out of print.*

9. **Mohaparājaya** : an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumārapāla, the Chalukya King of Guzerat, to Jainism, by Yaśaḥpāla, an officer of King Ajayadeva, son of Kumārapāla, who reigned from A.D. 1229 to 1232 : edited by Muni Chaturvijayaji with Introduction and Appendices by C. D. Dalal, 1918 .. 2-0

10. **Hammīramadamardana** : a drama glorifying the two brothers, Vastupāla and Tejaḥpāla, and their King Vīradhavala of Dholka, by Jayasiṁhasūri, pupil of Vīrasūri, and an Ācārya of the temple of Munisuvrata at Broach, composed between Samvat 1276 and 1286 or A.D. 1220 and 1239 : edited by C. D. Dalal, 1920 .. 2-0

11. **Udayasundarīkathā** : a romance (Campū, in prose and poetry) by Soḍḍhala, a contemporary of and patronised by the three brothers, Chchittarāja, Nāgārjuna, and Mummuṇirāja, successive rulers of Konkan, composed between A.D. 1026 and 1050 : edited by C. D. Dalal and Pandit Embar Krishnamacharya, 1920 .. 2-4

12. **Mahāvidyāviḍambana** : a work on Nyāya Philosophy, by Bhaṭṭa Vādīndra who lived about A.D. 1210 to 1274 : edited by M. R. Telang, 1920 .. .. 2-8

13. **Prācīnagurjarakāvysaṅgraha** : a collection of old Guzerati poems dating from 12th to 15th centuries A.D. : edited by C. D. Dalal, 1920 .. .. 2-4

14. **Kumārapālapratibodha** : a biographical work in Prākṛta, by Somaprabhāchārya, composed in Samvat 1241 or A.D. 1195 : edited by Muni Jinavijayaji, 1920 — 7-8

15. **Gaṇakārikā** : a work on Philosophy (Pāśupata School), by Bhāsarvajña who lived in the 2nd half of the 10th century : edited by C. D. Dalal, 1921 .. .. 1-4

16. **Saṅgītamakaranda** : a work on Music, by Nārada : edited by M. R. Telang, 1920 .. .. .. 2-0

17. **Kavīndrācārya List** : list of Sanskrit works in the collection of Kavīndrācārya, a Benares Pandit (1656 A.D.) : edited by R. Anantakrishna Shastry, with a foreword by Dr. Ganganatha Jha, 1921 .. .. 0-12

18. **Vārāhagṛhyasūtra** : Vedic ritual (domestic) of the Yajurveda : edited by Dr. R. Shamasastry, 1920 .. 0-10

19. **Lekhapaddhati** : a collection of models of state and private documents, dating from 8th to 15th centuries A.D. :

Rs. a.

edited by C. D. Dalal and G. K. Shrigondekar, 1925 .. .. .. .. .. 2–0

20. **Bhavişayattakahā or Pañcamīkahā :** a romance in Apabhraṁśa language, by Dhanapāla (*circa* 12th century) : edited by C. D. Dalal and Dr. P. D. Gune, 1923 6–0

21. **A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere,** compiled by C. D. Dalal and edited by Pandit L. B. Gandhi, 1923 .. .. .. 3–4

22. **Paraśurāmakalpasūtra :** a work on Tantra, with commentary by Rāmeśvara : edited by A. Mahadeva Sastry, B.A., 1923 .. .. *Out of print.*

23. **Nityotsava :** a supplement to the Paraśurāmakalpasūtra by Umānandanātha : edited by A. Mahadeva Sastry, B.A., 1923. Second revised edition by Swami Tirvikrama Tirtha, 1930 .. .. .. 5–0

24. **Tantrarahasya :** a work on the Prābhākara School of Pūrvamīmāṁsā, by Rāmānujācārya : edited by Dr. R. Shamasastry, 1923 .. .. *Out of print.*

25, 32. **Samarāṅgaṇa :** a work on architecture, town-planning, and engineering, by king Bhoja of Dhara (11th century) : edited by Mahamahopadhyaya T. Gaṇapati Shastri, Ph.D. Illustrated. 2 vols., 1924-1925 10–0

26, 41. **Sādhanamālā :** a Buddhist Tāntric text of rituals, dated 1165 A.D., consisting of 312 small works, composed by distinguished writers : edited by Benoytosh Bhattacharyya, M.A., Ph.D. Illustrated. 2 vols., 1925–1928 .. .. .. .. .. 14–0

27. **A Descriptive Catalogue of MSS. in the Central Library, Baroda :** compiled by G. K. Shrigondekar, M.A., and K. S. Ramaswāmi Shastri, with a Preface by B. Bhattacharyya, Ph.D., in 12 vols., vol. I (Veda, Vedalakṣaṇa, and Upaniṣads), 1925 .. .. 6–0

28. **Mānasollāsa or Abhilaṣitārthacintāmaṇi :** an encyclopædic work treating of one hundred different topics connected with the Royal household and the Royal court, by Someśvaradeva, a Chalukya king of the 12th century : edited by G. K. Shrigondekar, M.A., 3 vols., vol. I, 1925 .. .. .. .. 2–12

29. **Nalavilāsa :** a drama by Rāmachandrasūri, pupil of Hemachandrasūri, describing the Paurāṇika story of Nala and Damayantī : edited by G. K. Shrigondekar, M.A., and L. B. Gandhi, 1926 .. .. 2–4

30, 31. **Tattvasaṅgraha :** a Buddhist philosophical work of the 8th century, by Śāntarakṣita, a Professor at Nālandā with Pañjikā (commentary) by his disciple Kamalaśīla, also a Professor at Nālandā : edited by Pandit Embar Krishnamāchārya with a Foreword by B. Bhattacharyya, M.A., Ph.D., 2 vols., 1926 .. 24–0

Rs. A.

33, 34. **Mirat-i-Ahmadi**: by Ali Mahammad Khan, the last Moghul Dewan of Gujarat: edited in the original Persian by Syed Nawab Ali, M.A., Professor of Persian, Baroda College, 2 vols., illustrated, 1926–1928 .. 19–8

35. **Mānavagṛhyasūtra**: a work on Vedic ritual (domestic) of the Yajurveda with the Bhāṣya of Aṣṭāvakra: edited with an introduction in Sanskrit by Pandit Rāmakrishna Harshaji Śāstri, with a Preface by Prof. B. C. Lele, 1926 .. .. .. .. 5–0

36, 68. **Nāṭyaśāstra**: of Bharata with the commentary of Abhinavagupta of Kashmir: edited by M. Ramakrishna Kavi, M.A., 4 vols., vol. I, illustrated, 1926, vol. II, 1934 11–0
Vol. I (*out of print*).

37. **Apabhraṁśakāvyatrayī**: consisting of three works, the Carcarī, Upadeśarasāyana, and Kālasvarūpakulaka, by Jinadatta Sūri (12th century) with commentaries: edited with an elaborate introduction in Sanskrit by L. B. Gandhi, 1927 .. .. .. 4–0

38. **Nyāyapraveśa**, Part I (Sanskrit Text): on Buddhist Logic of Diṅnāga, with commentaries of Haribhadra Sūri and Pārśvadeva: edited by Principal A. B. Dhruva, M.A., LL.B., Pro-Vice-Chancellor, Hindu University, Benares, 1930 .. .. .. .. 4–0

39. **Nyāyapraveśa**, Part II (Tibetan Text): edited with introduction, notes, appendices, etc., by Pandit Vidhusekhara Bhattacharyya, Principal, Vidyabhavana, Visvabharati, 1927 .. .. .. .. 1–8

40. **Advayavajrasaṅgraha**: consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D., edited by Mahāmahopādhyāya Dr. Haraprasad Sastri, M.A., C.I.E., Hon. D.Litt., 1927 .. .. 2–0

42, 60. **Kalpadrukośa**: standard work on Sanskrit Lexicography, by Keśava: edited with an elaborate introduction by the late Pandit Ramavatara Sharma, Sahityacharya, M.A., of Patna and index by Pandit Shrikant Sharma, 2 vols., vol. I (text), vol. II (index), 1928–1932 .. .. .. .. 14–0

43. **Mirat-i-Ahmadi Supplement**: by Ali Muhammad Khan. Translated into English from the original Persian by Mr. C. N. Seddon, I.C.S. (*retired*), and Prof. Syed Nawab Ali, M.A. Illustrated. Corrected reissue, 1928 .. .. .. .. 6–8

44. **Two Vajrayāna Works**: comprising Prajñopāyaviniścayasiddhi of Anaṅgavajra and Jñānasiddhi of Indrabhūti—two important works belonging to the little known Tantra school of Buddhism (8th century A.D.): edited by B. Bhattacharyya, Ph.D., 1929 .. 3–0

45. **Bhāvaprakāśana**: of Śāradātanaya, a comprehensive work on Dramaturgy and Rasa, belonging to A.D. 1175–1250; edited by His Holiness Yadugiri Yatiraja Swami, Melkot, and K. S. Ramaswami Sastri, Oriental Institute, Baroda, 1929 .. .. 7–0

Rs. A.

46. **Rāmacarita**: of Abhinanda, Court poet of Hāravarṣa probably the same as Devapāla of the Pāla Dynasty of Bengal (cir. 9th century A.D.): edited by K. S. Ramaswami Sastri, 1929 .. .. .. 7–8

47. **Nañjarājayaśobhūṣaṇa**; by Nṛsiṁhakavi *alias* Abhinava Kalidāsa, a work on Sanskrit Poetics and relates to the glorification of Nañjarāja, son of Vīrabhūpa of Mysore: edited by Pandit E. Krishnamacharya, 1930 5–0

48. **Nāṭyadarpaṇa**: on dramaturgy, by Rāmacandra Sūri with his own commentary: edited by Pandit L. B. Gandhi and G. K. Shrigondekar, M.A. 2 vols., vol. I, 1929 .. .. .. .. .. 4–8

49. **Pre-Diṅnāga Buddhist Texts on Logic from Chinese Sources**: containing the English translation of *Śataśāstra* of Āryadeva, Tibetan text and English translation of *Vigraha-vyāvartanī* of Nāgārjuna and the re-translation into Sanskrit from Chinese of *Upāyahṛdaya* and *Tarkaśāstra*: edited by Prof. Giuseppe Tucci, 1930 .. .. .. .. 9–0

50. **Mirat-i-Ahmadi Supplement**: Persian text giving an account of Guzerat, by Ali Muhammad Khan: edited by Syed Nawab Ali, M.A., Principal, Bahauddin College, Junagadh, 1930 .. .. .. 6–0

51, 77. **Triṣaṣṭiśalākāpuruṣacaritra**: of Hemacandra, translated into English with copious notes by Dr. Helen M. Johnson of Osceola, Missouri, U.S.A. 4 vols., vol. I (Ādīśvaracaritra), illustrated, 1931; vol. II, 1937 (*shortly*) 15–0

52. **Daṇḍaviveka**: a comprehensive Penal Code of the ancient Hindus by Vardhamāna of the 15th century A.D.: edited by Mahamahopadhyaya Kamala Kṛṣṇa Smṛtitīrtha, 1931 .. .. .. .. 8–8

53. **Tathāgataguhyaka or Guhyasamāja**: the earliest and the most authoritative work of the Tantra School of the Buddhists (3rd century A.D.): edited by B. Bhattacharyya, Ph.D., 1931 .. .. .. 4–4

54. **Jayākhyasaṁhitā**: an authoritative Pāñcarātra work of the 5th century A.D., highly respected by the South Indian Vaiṣṇavas: edited by Pandit E. Krishnamacharyya of Vadtal, with one illustration in nine colours and a Foreword by B. Bhattacharyya, Ph.D., 1931 .. 12–0

55. **Kāvyālaṅkārasārasaṁgraha**: of Udbhaṭa with the commentary, probably the same as Udbhaṭaviveka of Rājānaka Tilaka (11th century A.D.): edited by K. S. Ramaswami Sastri, 1931 .. ... .. 2–0

56. **Pārānanda Sūtra**: an ancient Tāntric work of the Hindus in Sūtra form giving details of many practices and rites of a new School of Tantra: edited by Swami Trivikrama Tirtha with a Foreword by B. Bhattacharyya, Ph.D., 1931 .. .. .. 3–0

Rs. a.

57, 69. **Ahsan-ut-Tawarikh**: history of the Safawi Period of Persian History, 15th and 16th centuries, by Hasan-i-Rumlu: edited by C. N. Seddon, I.C.S. (*retired*), Reader in Persian and Marathi, University of Oxford. 2 vols. (Persian text and translation in English), 1932–34 .. .. .. .. 19–8

58. **Padmānanda Mahākāvya**: giving the life history of Ṛṣabhadeva, the first Tīrthaṅkara of the Jainas, by Amarachandra Kavi of the 13th century: edited by H. R. Kapadia, M.A., 1932 .. .. .. 14–0

59. **Śabdaratnasamanvaya**: an interesting lexicon of the Nānārtha class in Sanskrit compiled by the Maratha King Sahaji of Tanjore: edited by Pandit Viṭṭhala Śāstrī, Sanskrit Paṭhaśāla, Baroda, with a Foreword by B. Bhattacharyya, Ph.D., 1932 .. .. 11–0

61. **Śaktisaṅgama Tantra**: a voluminous compendium of the Hindu Tantra comprising four books on Kālī, Tārā, Sundarī and Chhinnamastā: edited by B. Bhattacharyya, M.A., Ph.D., 4 vols., vol. I, Kālīkhaṇḍa, 1932 2–8

62. **Prajñāpāramitās**: commentaries on the Prajñāpāramitā, a Buddhist philosophical work: edited by Giuseppe Tucci, Member, Italian Academy, 2 vols., vol. I, 1932 .. .. .. .. 12–0

63. **Tarikh-i-Mubarakhshahi**: an authentic and contemporary account of the kings of the Saiyyid Dynasty of Delhi: translated into English from original Persian by Kamal Krishna Basu, M.A., Professor, T.N.J. College, Bhagalpur, with a Foreword by Sir Jadunath Sarkar, Kt., 1932 .. .. .. .. 7–8

64. **Siddhāntabindu**: on Vedānta philosophy, by Madhusūdana Sarasvatī with commentary of Puruṣottama: edited by P. C. Divanji, M.A., LL.M., 1933 .. 11–0

65. **Iṣṭasiddhi**: on Vedānta philosophy, by Vimuktātmā, disciple of Avyayātmā, with the author's own commentary: edited by M. Hiriyanna, M.A., Retired Professor of Sanskrit, Maharaja's College, Mysore, 1933 .. 14–0

66, 70, 73. **Shabara-Bhāṣya**: on the Mīmāṁsā Sūtras of Jaimini: Translated into English by Mahāmahopādhyāya Dr. Ganganath Jha, M.A., D.Litt., etc., Vice-Chancellor, University of Allahabad, in 3 vols., 1933–1936 .. .. .. .. .. 48–0

67. **Sanskrit Texts from Bali**: comprising a large number of Hindu and Buddhist ritualistic, religious and other texts recovered from the islands of Java and Bali with comparisons: edited by Professor Sylvain Levi, 1933 .. .. .. .. .. 3–8

71. **Nārāyaṇa Śataka**: a devotional poem of high literary merit by Vidyākara with the commentary of Pītāmbara: edited by Pandit Shrikant Sharma, 1935 .. .. 2–0

Rs. A.

72. **Rājadharma-Kaustubha**: an elaborate Smṛti work on Rājadharma, Rājanīti and the requirements of kings, by Anantadeva: edited by the late Mahamahopadhyaya Kamala Krishna Smṛtitirtha, 1935 .. .. 10–0

74. **Portuguese Vocables in Asiatic Languages**: translated into English from Portuguese by Prof. A. X. Soares, M.A., LL.B., Baroda College, Baroda, 1936 .. 12–0

75. **Nāyakaratna**: a commentary on the Nyāyaratnamālā of Pārthasārathi Miśra by Rāmānuja of the Prābhākara School: edited by K. S. Ramaswami Sastri of the Oriental Institute, Baroda, 1937 .. .. 4–8

76. **A Descriptive Catalogue of MSS. in the Jain Bhandars at Pattan**: edited from the notes of the late Mr. C. D. Dalal, M.A., by L. B. Gandhi, 2 vols., vol. I, 1937 8–0

## II. BOOKS IN THE PRESS.

1. **Nāṭyaśāstra**: edited by M. Ramakrishna Kavi, 4 vols., vol. III.
2. **Mānasollāsa** or Abhilaṣitārthacintāmaṇi, edited by G. K. Shrigondekar, M.A., 3 vols., vol. II.
3. **Alaṁkāramahodadhi**: a famous work on Sanskrit Poetics composed by Narendraprabha Sūri at the request of Minister Vastupāla in 1226 A.D.: edited by Lalchandra B. Gandhi of the Oriental Institute, Baroda.
4. **Sūktimuktāvalī**: a well-known Sanskrit work on Anthology, of Jalhaṇa, a contemporary of King Kṛṣṇa of the Northern Yādava Dynasty (A.D. 1247): edited by Pandit E. Krishnamacharya, Sanskrit Pāṭhaśālā, Vadtal.
5. **Gaṇitatilaka**: of Śrīpati with the commentary of Siṃhatilaka, a non-Jain work on Arithmetic with a Jain commentary: edited by H. R. Kapadia, M.A.
6. **Dvādaśāranayacakra**: an ancient polemical treatise giving a résumé of the different philosophical systems with a refutation of the same from the Jain standpoint by Mallavādi Suri with a commentary by Simhasuri Gani: edited by Muni Caturvijayaji.
7. **Haṁsa-vilāsa**: of Haṁsa Bhikṣu: forms an elaborate defence of the various mystic practices and worship: edited by Swami Trivikrama Tirtha.
8. **Tattvasaṅgraha**: of Śāntarakṣita with the commentary of Kamalaśīla: translated into English by Mahamahopadhyaya Dr. Ganganath Jha.
9. **Kṛtyakalpataru**: of Laksmidhara, minister of King Govindachandra of Kanauj: edited by Principal K. V. Rangaswami Aiyangar, Hindu University, Benares.

Rs. A.

10. **Bṛhaspati Smṛti,** being a reconstructed text of the now lost work of Bṛhaspati : edited by Principal K. V. Rangaswami Aiyangar, Hindu University, Benares.

## III. BOOKS UNDER PREPARATION.

1. **A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda :** compiled by the Library staff, 12 vols., vol. II (Śrauta, Dharma, and Gṛhya Sūtras).

2. **Prajñāpāramitās :** commentaries on the Prajñāpāramitā, a Buddhist philosophical work : edited by Prof. Giuseppe Tucci, 2 vols., vol. II.

3. **Śaktisaṅgama Tantra :** comprising four books on Kāli, Tārā, Sundarī, and Chhinnamastā : edited by B. Bhattacharyya, Ph.D., 4 vols., vols. II–IV.

4. **Nāṭyadarpaṇa :** introduction in Sanskrit giving an account of the antiquity and usefulness of the Indian drama, the different theories on Rasa, and an examination of the problems raised by the text, by L. B. Gandhi, 2 vols., vol. II.

5. **Gurjararāsāvalī :** a collection of several old Gujarati Rāsas : edited by Messrs. B. K. Thakore, M. D. Desai, and M. C. Modi.

6. **Paraśurāma-Kalpasūtra :** an important work on Tantra with the commentary of Rāmesvara : second revised edition by Swami Trivīkrama Tirtha.

7. **Tarkabhāṣā :** a work on Buddhist Logic, by Mokṣākara Gupta of the Jagaddala monastery : edited with a Sanskrit commentary by Pandit Embar Krishnamacharya of Vadtal.

8. **Mādhavānala-Kāmakandalā :** a romance in old Western Rajasthani by Gaṇapati, a Kāyastha from Amod : edited by M. R. Majumdar, M.A., LL.B.

9. **A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda :** compiled by the Library staff, 12 vols., vol. III (Smṛti MSS.).

10. **An Alphabetical List of MSS. in the Oriental Institute, Baroda :** compiled from the existing card catalogue by the Superintendent, Printed Section.

11. **Nītikalpataru :** the famous Nīti work of Kṣemendra : edited by Sardar K. M. Panikkar, M.A., of Patiala.

12. **Chhakkammuvaeso :** an Apabhramsa work of the Jains containing didactic religious teachings : edited by L. B. Gandhi, Jain Pandit.

